वास्तु-शमन- -नम् सा ३, ३,५.
?वास्तुह[a]- -हम् ऐ ३,११;२४;५, १४[२]; -हस्य[b] लुशा २५:९;११.
वास्तु-हीन- -नः लुशा २६:३०.
वास्तोस्-पति[d]- -तये तै ३,७,९,७.
वास्तोष्पत्य[d'e]- -त्यैः गो १,२, १८.
वास्य,१वास्य,स्या- √वस्(निवासे)द्र.
२वास्य- √वस्(आच्छादने) द्र.
३वास्य- √वस्(छेदने) द्र.
वास्यमान- √वस् (निवासे) द्र.
वास्यस्क[f]- -स्कः जैमि ३,३३२.
वास्यु[g]- -स्युः गो १,४,२०;५,६.
वाह्-, १वाह-,२वाह-,वाहन-,वाहम् √वह् द्र.
?वाहवभिभेदेयम्[h] लुजै २९ : १९.
?वाहावभिपेदेयम्[h] लुशा २९:१८.
वाहस्- √वह् द्र.
?वा हस्य[i] जैमि ३,१२.
वाहित-,वाहिन्-, वाहिष्ठ-,वाहिष्ठीय-, वाही-,वाह्य,वाह्य- √वह् द्र.
वाह्नेय- २वह्नि- द्र.
वि[j] तै १,१, ६, १; तैआ ६, १, १; जैमि ३,३९.
वि-वत्[k]- -वत् ऐ ६, ७; शां २०, ३[२]; २२, २[४]; गो २, ५, १३; -वान् शां २०,३[२];२५,५[२].
विवती[l]- -ती शां २०,३[२].
१वि[m'd]- वयः ऐ३,१९;शा१,८,३,१४; का २,८,१,१३; तै २,५ ८,३; ३,३,९,३; तैआ ४,२०,३;४२, ३; तैआआ ७३; जैमि २,४१३; तां ५,६, १५; सा १,७,१३; गो २,४,१६; बेः श ५, १,५, २०; का ६,२,१,१०.
२वि[n]- वि श १४,८,१३,३[२].
३वि[o'd]- वि जैमि ३,३९.
विंशति[d]- -तिः ऐ २, १७[२]; ५, ४; २८[२]; ऐआ ३, २, १; शां १६,७;२२,७; श १,३,५, ११; २, ३,३, १९; २०; ७,५,२, ४४; १०,१,२, ९; ४,२,२; ५, ४,५[२];७[२]; ११,२,६, ११; १२, २,२,६;४,१२; ३,२, ४[२]; जैमि १,२९; २३५; २,३०[२/p];x; ३, ३२९; तां २३, १४, ६; ७; गो १, ५, ३; ५; -तिम् शां ९, ६; १२,३; श १०,४, २,१६; जैमि १,२४२[२]; ३,१;३२६; -ती श ४, ४, १, १५ ; का ५, ४, ३, १३; -तेः ऐआ ५, २, ४; का ३,९,१, ७; -त्या तैआ १,११, ८; -त्याम् श ११, १, २, ९; १३,५,१,१. [°ति- अष्टन्°, एक°,एकया न°, एकान्न°,एकोन°, चतुर्°, त्रयन्°, द्वा°, नवन्°, १पञ्चन्°, षष्°, सप्तन्°].
१विंश[d]- -शः जैमि २, १७३;तां २३,१४,५; गो १,५,२४; -शाः तै ३,११,२, ३; -शान् गो १, १, ५; -शे ऐ ७, २; -शेषु तै ३,११,२,३. [°श- अर्वाच्°, ३परस्°, षष्°].
२विंश[q]-> °श-स्तक्ष- -क्षम् कासं २७:६.
विंशति-प्रतिष्ठान[r]- -नाः जैमि २, १७३[२];२७३[२].
विंशति-शत[s]- -तम् शां ११, ७[२]; ३०, १०[२]; श १२, ३,५, १२[२]; गो १,५, ६[२]; -तानि ऐआ ३, २,१[t]; शां११,७[t];शांआ२,१०[t]; ८,१[t'u]; श७,३,१,४३[t]; का३, १,५,१[t]; ६,१[2t]; जैमि २,७१[t]; गो १,५,२३; -ते गो१,५,२३.
विंशतिशते(त-इ)ष्टक[v]- -कान् श १०,४,२,८.
विंशत्य(ति-अ)क्ष(र>)रा[v]- -रा ऐ ४, ३; श १०,५, ४, ८; जैमि २,५९; -राम् शां १७,२.
विंशत्य(ति-अ)ङ्गुलि[v]- -लिः श १२. ३,२,२; गो १,५,५.

*a*) विप.(ऐ.), नाप. (=वास्तुप- ⌊लुशा.⌋) । व्यु.? उप. <√हा (त्यागे) इति प्रायोवादः, <√हन् इति सा. (ऐ ३,११) । *b*) पाभे. पृ १३२० *o* द्र. । *c*) सकृत् पाभे पृ १३२० *m* द्र. । *d*) वैप १ द्र. । *e*) =मन्त्र-विशेष- । *f*) =ऋषि-विशेष- । *g*) =आचार्य-विशेष- । *h*) पाठः? आभ्यां हाऽपबिभेदाऽयम् इति संस्कर्ता शोधयेत् ; वां हाऽपबिभेदाऽयम् इति च पाठं Hopkins संस्थापुकः ⌊तु. संटि.⌋ । सपा. जैमि ४,१२५ अवबिभेद अयम् (C. ⌊जै १८६⌋ °भेदेयम्)? >°भेदाऽयम् इति सूपपदः शोधः द्र. (तु. परि.) । *i*) पाठः? २वाह->-हस्य इति शोधः विमृश्यः । *j*) स्वाअ. । *k*) विप. (⌊-विशब्द-युक्त-⌋ अनुरूप-, स्तोत्रिय- प्रमृ.) । *l*) विप. (प्रतिपद्-) । *m*) =पक्षिन्- । *n*) =अन्न-(=२वि- ⌊वैप३ द्र.⌋) । *o*) वियन्तिना (ऋ ६,६०,५) इत्यस्य पूर्वांशः । *p*) °तिम् इति शोधः समुचितः (तु. C. ⌊जै ११८⌋) । *q*) =विंशति- । स्वार्थे प्र. । *r*) विप. (पशु-) । बस. । *s*) द्वस. पूप. स्वरः (पा ६,२,३५) । *t*) सप्त विंशतिशतानि इति द्वे पदे समुदिते असमर्थसमासेन ७२० ⌊=सवत्सरस्याहोरात्राणि⌋ संपद्यन्ते (तु. K.; वैतु. BW. प्रमृ. =१२७ इति?) । *u*) °तिः श° इति आन. मुपा. शोध्यः (तु. मूको. K. च) । *v*) विप. । बस. पूप. प्रकृतिस्वरः ।

विंशिन्[a]- -शिन: गो १,१,८[२].

विंशिनी- -नी तां २४,१०,१.

विक- ,निक°,हिक°,हिक°°.

विकनिकहिक- प्रजापतेः°.

वि-कङ्कत[b]- -तः श २, २, ४, १०; ५. २,४,१८; ६,६,३,१[२]; १४, १,२,५[२]; का १, २,४,७; ७,१, २,१८; -तम् तै १, १,३, १२; २,१,७; तैआ ५,४,९.

वैकङ्कत[c]- -तः श ५,२,४,१८; का ७.१,२, १८; तै १,१, ३,१२; -ताः श १, १,३,२०; का २, ३,२,१८; तैआ ५,४,९; -तान् श १,३, ३, २०; -ते श ५,२, ४,१५; का ७,१,२, १५; -तौ श १४,१,३,२६.

वैकङ्कती- -ती श १४,१,२,५; तैआ ५, २, ५; १०, १९, १; -तीम् श ६, ६,३,१; ९,२,३, ३९.

वि-करण- वि √कृ द्र.

१वि-कर्ण[b]- -र्णम् ऐ ४, १९; तै १, २, ४,३; जैमि २, ३७; ३९०; तां ४,६,१५.

विकर्ण-भास- -से जैआ २, २३, १३-१८. [°स- मृत्योस्°, वायोः°].

२वि-कर्ण->विकर्णी[b]- -र्णी श८,५, ४,१०; ७, ३, ९-११; १०,४, २,१८;५,४,१५; -र्णीम् श ८, ५, ४,९; ७,३,९[२]; १०; ११[२]; १०,१,३,७.

१,२वि-कर्त- वि √कृत् (छेदने) द्र.

वि-कर्तृ- वि √कृ द्र.

वि कर्ष-, वि-कर्षत्- वि √कृष् द्र.

विकल- वाच्°.

वि-कल्प- वि √क्लृप् द्र.

वि-कश्यप[d]- -पे ऐ ७,२७.

वि √कस्- > विकसित- > विकसित-वद(न>)ना[e]- -ना कागा ११८:६.

वि-कसुक[b]- -कः काअ ७:१[f].

वि-कस्त- -स्तम् श ६,४,३,४[२g].

वि √काङ्क्ष्, व्यकाङ्क्षत् तां ६,९, २२.

वि-कार- प्रसृ. वि √कृ द्र.

वि √काश् > वि-चाकशत्- -शत् तैआ १,११,२; जैमि १,२२०.

वि √कित्, विचिकेत तै ३ ७,१०, ६.

विचिकित्सति श २,२,४,९; तै २,१,२,२; विचिकित्सति श १४, ७,२,१८[h]; व्यु(वि-अ)चिकित्सत् श २, २,४,९; का १,२,४, ७; व्यु(वि-अ)चिकित्सत् श २, २, ४,६; का १,२, ४, ५; तै २,१, २,२; विचिकित्सेत् ऐ ८ १५; ऐआ ३,२,६; शांआ ८,११[२].

वि-चिकित्सत्- -त्सन् श २, २,४, ९; का १,२,४,७. [°त्सत्- १अ°].

वि-चिकित्सा- -त्सा शां २६,३; श १०, ६, ३, २; १४, ४, ३,९; -त्साम् शां २६, ५; -त्सायाः का १,२, ४,७; -त्सायै श २, २,४,९[२]; तै २,१,२,२.

[°त्सा- १अ°, कर्मन्, °वृत्त°].

वि-किर- वि √कृ (विक्षेपे) द्र.

विकुण्ठ[i]->वैकुण्ठ[j]- -ण्ठः शांआ ६,२;७; श १४,५,१,६.

वि-कुर्वत्- वि √कृ द्र.

विकुसुक[k]- -कः तैआ २, ४,१.

वि-कूल- उत्कूल°.

वि √कृ, विकरोति श १,९, २, १०; ३, ७,२, ८[२]; ४,४, २, १६[२]; ६, ७,२,५[२]; ७; ७,१,१, १७; १९;९,२,३, ३४; का २,८,३, ९[२]; ४,७,२,७; ५,४, ४, ११[२]; तै १,८,१, २; विकरोति श ६, ७,२,७; ७, १, १, १९; तै २, ७,२, १; विकरोति ऐ २, ३९[२]; शां ३,९; ३०, ४; तां २०, ९, २; विकुरुतः श ९, ५,१, ५६; वि ... कुरु श १,६,३,१७; का २,६,१,१०; विकरवामहै[l] जैमि २, २४९; विकरवाम श ३, १, ३, ४; का ४, १, ३, ३; व्य(वि-अ)कुरुत श १०,६,५.३; तै १,७,१, २; व्य(वि-अ)करोत् ऐ ५, १५ ; तै २, ६,२, ३[m]; तैआ ५,१०,१; जैमि १, १६०; २,२४६; तां २०,१४,५; १६, १; व्यकुर्वत जैमि २, २४९; तां ९, २, ३; व्यु(वि-अ)कुर्वन् का ४, १, ३, ३.

विचकार श ७,५, २, ३५; विचक्रुः श ३, १,३, ४; का ४, १,३,३; विचक्रुः श ३,१,३, ४; विकरिष्ये तै १,७,१,२.

---

*a*) डिनिः प्र. (पावा ५,२,३७)। *b*) वैप१ द्र.। *c*) विप.। विकारेऽर्थे अण् प्र.। *d*) विप. (यज्ञ-)। *e*) विप. (गायत्री-)। *f*) पाभे. वैप१ विकसुकः मै ४,१४,१७ टि. द्र.। *g*) पाभे. वैप१ विकस्तम् मा ११,३९ टि. द्र.। *h*) पाभे. वैप१ विचिकित्सति मा ४०, ६ टि. द्र.। *i*) = इन्द्र-। *j*) वैप४ २वैकुण्ठ- टि. द्र.। *k*) = विकुसुक- इति पाभे. वैप१ द्र.। *l*) सप्रा. तां २१,१,२ विकल्पयामहै इति पाभे.। *m*) पाभे. वैप१ व्यचिक्रत् मा १९,७८ टि. द्र.।

विक्रियते श ६, ७,२,५; ७; ७, १,१,१०;१७;३, १, ९; विक्रियते श ६, ७,२, ७ ; ७,१, १, १९ ; विक्रियेते ऐ ६, १६ ; गो १,१,२६; विक्रियन्ते ऐ २,३९; जैमि १,२६७;२,१८; विक्रियातै श ७, १,१,१०; १७;३,१, ९; विक्रियान्तै श ७,३,१,१०.

वि-करण- कल॰, १बल॰.

वि-कर्तृ- -र्ता श १३, ३, ८, १[२]; जैमि १,२५९; तां ९,१०,३.

वि-कार- -रः ऐआ २, ३, ६[२]; शां ३,५[२]; जैमि १,३०५; गो १,१, २४; -रेण शां ३, ५[२].

वि-कारम्[a] जैमि ३,३३३.

वि-कारिन्- -री गो १,१,२४; २६.

वि-कार्य- -र्यौ गो १,१,२६.

वि-कुर्वत्- -र्वन्तम् तैआ ३,११,२.

वि-कृत- -तः श ३, १, ३, ४; ष २,२,१२; -तम् ऐ ६, १६; गो १,२, २०; -तानि तैआ १, ३, ६; जैमि ३,१. [॰त-१अ॰].

विकृत-रूप- -पाणि ष ५,२१,२.

विकृता(त-अ)ङ्ग- १अ॰.

वि-कृति- -तयः ऐआ १, ५, १; -तिः ऐ २,३९[२]; ६,१६; शांआ ८,११; जैमि ३,३८३;-ती कासं १४१:१३;-त्या श ६,७,२,५; ८;९;३,९;४,२; ९,२, ३, ३४.

वि-क्रियमाण- -णम् श ६, १, ३, २०.

वि √ कृत्(छेदने), विकृन्तति श ३, १,२,१६; का ४,१,२,९.

१वि-कर्त- गो॰.

२वि-कर्त- > वैकर्त[b]- -र्तस्य ऐ ७,१[२].

वि-कृत्त- -त्तः श ३, ८, ३, ३७; १२,९,१,३; का ४, ८,३, २५; -त्तेन श ३,८, ३, १०; का ४, ८,३,६.

वि-कृन्तत्- -न्तन्तम् तै ३,४,१६, १[c].

वि √ कृष्, विकर्षति श ९, १, २, २०[२];२५;२८-३०;३१[२]; विकर्षति श ९, २, १, २१ ; २३ ; विकर्षन्ते जैमि १,३२० ; वि… कर्षन्ते ऐ ८, ११; विकर्षेत् श ९,५,१,६३.

विकृषति श ७, २, २, ७; १४; १८; १३,८,२, ८; विकृषति श ७,२,२, ८;१८;२०; १३,८,२, ८; विकृषन्ति श ६, १,३, ४[२]; विकृषन्तु[d] श ७,२,२,९.

वि…अकृक्षथाः श ११, ७, २, २; विकृक्ष्ये श ११,८,४,२;४.

वि-कर्ष- -र्षः जैमि २, १६८; ३६८. [॰र्ष- १अ॰,यज्ञ॰].

वि-कर्षत्- -र्षता जैमि १,३३५. [॰र्षत्- १अ॰].

वि-कृष्ट,ष्टा- -ष्टः श ६, २,१, ७[२]; -ष्टम् श ४,६,८,१९[२]; ९,५,१, ६३; ११,८,४,२; ४; जैमि १, ३२०; -ष्टायै जैमि २, ३१९; ३३८;३५९[२]. [॰ष्ट- १अ॰].

विकृष्टा(ष्ट-आ)श(य>)या[e]- -या जैमि ३,३२७.

वि √ कॄ(विक्षेपे) > वि-किर- -रान् मं २,२,५.

वि √ क्लृप्, व्यकल्पयत् गो २,१,७; व्य(वि-अ)कल्पयन् तैआ ३, १२,५;विकल्पयेथाम् तां२१,१ १;विकल्पयामहै तां२१,१,२[f].

वि-कल्प- > वैकल्पिक- -कम् आ २,२५,७.

वि-क्लृप्त- -प्तः तैआ ३,११,६. [॰प्त- १अ॰].

वि √ क्रम्, विक्रमते ऐ ६, १५; श १, १,२,१३;९,३,९; ३,६, ३, ३; ६, ७, २, १३-१५; का २, १, २, १२; ८, ४,५; ४,६, ३, २; तै १,१, ५, १०; विक्रमस्व श ३, ६,३,१५;४,३; ४, ५,१, १६; ६, ७,२, १३; १४; १५; का ४,६,३, १०; ४, २; ५, ५, ४,८;तै१,२,१,२३; तैआ३,१५, १; तैआआ ४९; तां २१, १०, १३[g];व्य(वि-अ)क्रमतऐ१,१; तै १,१,१०,३;२,७,१४,३;तां२०, ३,२; व्य(वि-अ)क्रामत् तै१,२, १,२७;तैआ३,१२,२; वि…क्रामेयुःश१३,२,४,२;तै३,९,१,२.

विचक्रमे ऐ १, १७; २५[२]; ६, १५; श १,१,२,१३; ९, ३,९; ३,.५,३, १३; ६, ३,३; ९,२, ३,१८;१२,४, १,४; ५; का २, १,२,१२;८,४,५; ४,५,३,११; ६, ३,२; तै १,४, ३,६; २, ४, ३,५[२];६,१;५,५,४; ७,१४, ३; ८,३,३;३,१,२,६; जैमि१,५२[२]; २,११२;तां२०,३,२; ष१,६,८; ५,१,४;१०,३; सा१,५,६; व्य(वि-अ)क्रस्त श १,९,३,१०[३h]; १२[३h]; का२,८,४, ६[३h]; ८[३h];

a) णमुलन्तम् । b) सा. = प्रौढ-मांसखण्ड-; ?K. = पार्श्व-। तद्धितः अण् प्र. । एतदनु वैप४ विशेषोऽयं द्र.। c) ॰कृन्त॰ इति मुपा. स्वरः शोध्यः (तु. मा ३०, १८)। d) पामे. वैप१ विकृषन्तु क्र ४, ५७,८ टि. द्र.। e) विप. (वाच्-)। बस.। f) पामे. पृ १३२२k द्र.। g) पामे. पृ ८२ c द्र.। h) पामे. वैप१ विक्रमे तै १,६,५,२ टि. द्र.।

वि···अक्रंसत गो २,६,१३.

**वि-क्रम्–** -मः श १२, ९, २, ५; –मा: जैमि २,२९८; –मान् श ३, ५,१,१-६; २६; ३,१९; ६, १,३; का ४,५,१,१[६]; १६; ३, १८; ६, १, ३; जैमि २, २९८; –मेषु श १,७, ३, २३; का २, ७,१,२०; –मौ श १२, ९, २, ५. [°म- चतुर्विंशति°, त्रय-स्त्रिंशत्°, त्रिंशत्°, षट्त्रिंशत्°].

**वि-क्रमण–** -णम् श ५, ४,२, ६[१]; का ७,३,२,६[२]; –णेषु श ३,५, ३,२३; का ४,५,३, २१; तै २, ४,३,४.

**वि-क्रममाण–** -णः श ९,२,३,१८.

**वि-क्रम्य** जैमि १,१९७.

**वि-क्रान्त–** -न्तम् श ५, ४, २,६; का ७, ३,२, ६[२]; तै १, १, ५, १४.

विक्रान्त-वत्– -वत् ऐ ३,१८[२].

**वि-क्रान्ति–** -न्तिः श १, १, २, १३;९,३,९; ३,६, ३,३; तै १, ४, ९, ५; –न्तिम् श १, १, २,१३[२];९, ३,९[२]; ३,६,३, ३[२]; का २,१,२,१२[२]; २,८,४, ५[२]; ४,६,३,२[२].

वि-क्राम्– -माः तै १, १, ४, १; –मेषु तै १,१,४,१[२].

वि-चक्रमाण्– -णः श ३, ५, ३, २१; का ४,५,३,१९.

**वि-क्रियमाण–** वि √कृ द्र.

**वि √क्री,** विक्रीणावहै श २,५,३,१७; का १,५,२,१६.

वि-क्रय– क्रय°.

वि-क्रयिन्– सोम°.

वि-क्रीय सा १,८,१;२.

**वि √क्लिध्(=√क्लिद्)**

वि-क्लिध्र[a]– -धः तैआ १, २, ३; –धस्य श १३,३, ६,५; तै ३, ९,१५,३.

**वि √क्षर्,** विक्षरन्ति तै २, ४, ६, ११; व्य(वि-अ)क्षरत् श ६,१, २, २९; ७,३,१,१६; १४, १, २, ९;१२; १९; ३, ११; १५; २४; ३१;२, २,११; १४; ३५; ५३; व्य(वि-अ)क्षरत् श १४, १,१,११.

वि-क्षर(त्>)न्ती– -न्तीम् श ५, ५,४,२८[b].

वि-क्षार्[c]– -रः तै १,५,१,१.

**वि √क्षि[d],** विक्षिणुयात् का २,२,४, १४.

विक्षिणाति[२],विक्षिणाति का ४, ५, १, १५; विक्षिणन्ति श ९, १,१,२३.

विचिक्षीषन्ति श ९,१,१,२३.

वि-क्षिणत्->विक्षिणत्-क[d]– -केभ्यः[e] श ९,१,१,२३.

वि-क्षीण– १अ°.

वि-क्षितोस्(:) तां १९,८,६.

**वि √क्षिप्,** विक्षिपन्ति तैआ २, २,१.

विचिक्षेप शांआ ६,१९.

वि-क्षिप्[f]– -पः तैआ ४, २४, १; २५,१[g].

**वि-क्षुद्र[h]–** -द्रम् ऐ १, २१; ऐआ १,५,१; –द्राः ऐ ५,६.

**वि √क्षुध्,** व्यक्षुध्यन् तै २,२, ७,३; ११,५.

**वि √क्षुभ्,** विक्षोभन्ते श १, १, २, २२; का १,४, २, ९; २,१,२, १५.

विक्षुभ्णुयुः जैमि १,२११.

वि-क्षुब्ध– १अ°.

वि-क्षोब्धोस्(:) श १, १,२, २२; २,४,१,१४; का १,४,२,९; २, १,२,१५.

वि-क्षोभ–, वि-क्षोभयत्– १अ°.

**विखानस्–** -नाः जैमि ३,१९०.

वैखानस[i]– -सः जैमि ३, ९९[२]; २१५[२]; तां १४, ९,२९; –सम् आ, जैआ १, २४३; जैमि २; २३७;३,१९०[२];तां १४,४,६;७; १८,११,१०; –सस्य आ,जैआ १,६२; –साः तैआ १, २३,३; जैमि ३, १९०; तां १४, ४, ७; सा १,१, १७; –सान् जैमि ३, १९०.

**वि √खिद्,** विखिदति[j], विखिदतः[j] शां २,९.

**वि √ख्या,** विचिख्युः तै २, ८, २, २; विख्येषम् का ५, ४, १, १४; तै ३, २, ४, ७[k]; वि··· ख्येषम् श ४, ३,४, १७[k]; व्य-ख्यत् श २, १, ४, २९; का १, १, ४, २६; तै २, ४, ६, १०;

---

*a*) विप. [ ⌊विक्लिन्न-⌋ वरुण-, खलति- (तु. भा. सा ; वैतु. कर्कविद्याधरौ ⌊काश्रौ २०,८,१६⌋ = दन्तुर- इति; O. ⌊शांश्रौ १६,१८,१८⌋ = कुष्ठिन्- इति) ] । गस. उप. कर्तरि काऽन्ते थादि-स्वरः । *b*) सपा. का ७,५,२, २२ विश्चोतन्तम् इति पाभे. । *c*) गस. घञन्ते थादि-स्वरः । *d*) वैप१ द्र. । *e*) पाभे वैप१ आक्षिणकुभ्यः मै २,९,९ टि. द्र. । *f*) =मरुत्- । गस. उप. कर्तरि काऽन्ते थादि-स्वरः । *g*) पाभे. वैप१ विक्षिपः टि. द्र. । *h*) विप. । प्रास. । *i*) =ऋषि-विशेष-, साम-विशेष- च । अपत्यार्थीयः तेनदृष्टीयश्च अण् प्र. । *j*) ?आन. विषी° इति (तु. K. टि.) । *k*) वैप१ अभि तै १,१,४,२ टि. द्र. ।

जैमि ३, ३१; वि…अख्यत् श ६, ७, ३, २; तै ३, ६, ८, १: वि…अख्यत् श ६,७,२,४; तै २,८, ६, २; वि…अख्यन् तै २,८,६,२; व्यख्यत शां १९,९.
विख्यापयति श ६,७,३,२.
वि-ख्याय श ६,३,३,१२[a].
**वि√गच्छ्, गम्**, विगच्छति जैमि २,४१७.
वि…गमयति जैमि १,२१२.
**वि√गा (गतौ)**, व्यगात् ऐ २, २१; २८;६,२६; शां १३,९; विगात जैमि १,४१[९].
**वि√गाह्**, वि…गाहते कापा ९३: १३.
वि-गाह[b]- -हः ऐआ ५,२,१.
**वि√गुह्** > वि-गूढ- १अ°.
**वि√गृह्, ग्रह्**, विगृह्णाति श ३, २,४,८; ४,२,३,११; ३, ५,९; का ४, २, ४, ६; ५,२, ३, ७; विगृह्णाति श ४, २,३,६; ९; का ५,२, ३, ३; ५; विगृह्णाति शां १४, २[२]; तां ६, ६, १४; वि…गृह्णाति शां १४, २; विगृह्णते श ३,९,४, २५[३]; का ४, ९, ४, २१[४]; विगृह्णते का ४, ९,४,२१; विगृह्णन्ति श ४, २, ३,१५; का५,२,३,११; तां६,६, १५; व्यं(वि-अ)गृह्णात् तै १,४, १,१; व्यं(वि-अ)गृह्णत का ५, १,३,४; तै१,१,१०,१;३,१,२; २. २, ८, ६ ; तैआ ५, १, ६; व्यु(वि-अ)गृह्णत श ४,१, ३,५; का ५,१,३, ४;५, १, ३[c]; व्यगृह्णत ऐ ३, ९[२]; विगृह्णीयात् श ४,२, ३,११; का ५, २, ३, ७[२]; विगृह्णीयात् का ५, २, ३, ७; विगृह्णीयात् ऐ ३, ४६; ७, ३२.
वि-गृह्य श ४,१,२, २६.
वि-ग्रहण- -णम् तां ६,६,१२. [°ण-पद°].
वि-ग्राहम् श ६, ६, ३,५[२]; का ७, ५,१,१६; तै २,३,२,१. [°ह्म् १अ°].
**वि√गै**, विगायति जैमि १, २६६; ३२० ; विगायन्ति जैमि १, ३१८[२]; ३२० ; विगायेत् जैमि १, १०३;१०७; २६६[४]; ३१८; ३२० ; वि…गायेत् जैमि १, १०३;१०७;३२०.
विजगुः जैमि १, २६४; २६५; व्यगासिष्टाम्, व्यगासिषुः जैमि १,२६४.
विगीयन्ते जैमि १, २६४[२]; २६५.
वि-गातुम् जैमि १,१०३[७].
वि-गायत्- -यन् जैमि १, २६४; -यन्तः जैमि १,३१८[२].
वि-गीत, ता- -ताः जैमि १,२६४; ष २,३, ११;१२; -ते जैमि १, १७३.
वि-गीय ष २,३,१२.
वि-गे(य>)या- -याः जैमि १, २६२[३];२६४[३];२६५.
वि-जिगासत्- -सन् जैमि १,१०३.
वि-जिगीथ[d]- -थः श १४, ९, ४, १७[e].
**वि√ग्रथ्**, विग्रथ्नाति श ३, ३,२, १८.
वि-ग्रथित- -तः श ५,२, १, ५[२f].
**वि√ग्लै**, वि…ग्लायति, वि…ग्लायन्ति जैमि २,२३.
वि-ग्लापन- -नम् श १४, ७, २, २३.
**वि-घन-**, विघन-त्व-, वि-घातुक-, विघ्न- वि√हन् द्र.
**√विच्** अध्यप°, अप°, सम्°.
विक्त- प्रवि°,वि°.
विक्ति-, विक्तृ- वि°.
विच्य सम्°.
विविचि[b]- -चये ऐ ७, ६[२]; श १२, ४,४,२; तै ३, ७, ३, ५; जैमि १,६४; -चिम् श १२,४, ४,२.
**वि-चक्र**[g]- -क्रम् ऐ ६,३०; गो २,६, ९.
**वि-चक्रमाण-** वि√क्रम् द्र.
**वि√चक्ष्**, विचष्टे ऐआ ३, १, ६; शांआ ७,१९; तैआ ३, ११,४; विचक्षते तैआ ३, ११,५; ११; सा ३, १, ११; विचष्टाम् तै ३, १,१,१०;२,५;११; विचक्ष्व श ३, १,१,१०[२]; का ४,१,१, ६; गो १,१,३२.
विचक्षयन्ति गो १,३,१९;२,२, २३.
वि-चक्षण,णा[h]- -णः शां ४,४;७, १०[२];१२५; शांआ ४,९; जैमि

---

*a*) पाभे. वैप१ विक्शाय मै २, ७, २ टि. द्र. । *b*) वैप१ द्र. । *c*) सपा. श ४,४,३,४ अघ्नन् इति पाभे. । *d*) विप. (अतिप्रख्यात-पुत्र-) । गस. उप. थक् प्र. सन्वद्भावश्च उसं. (पाउ २, ७) । थादि-स्वरः (तु. PW. प्रभृ.; वैतु. द्विवेदगङ्गः बस. इति?) । *e*) सपा. बृउ ६, ४, १८ विगीतः इति, विजिगीतः इति च मूको. [तु. PW. प्रभृ.] पाभे. । *f*) सपा. का ६,२, २, ६ विनद्धः इति पाभे. । *g*) विप. । मलो. बस. । *h*) विप., व्यप. [वं.] । वैप१ द्र. ।

१,१६६;२,६४[2];३,३२; १३५; २१३; २५२; तां ११, १०, ६; वं २; -णम् ऐ १,६; शां ७,३; तै २, ५, १,३; ३, १, १, १; जैमि १, ५०; २, ६४[2]; -णस्य शां १२, ५[2]; जैमि १, ३५१; -णा शांआ ३, ३; तै २,८, ९, १; -णात् शांआ ३, २; जैमि १, १८; ५०; वं २; -णाम् शांआ ३.५. [°ण- शत°].

विचक्षण-व(त्>)ती- -तीम् ऐ १,६[2]; जैमि २,६४[4]; गो १, ३, १९; २,२,२३[2]; -त्या शां ७,३.

वि-चक्ष्य तां १,५,१९.

वि √ चत्, वि···चातयस्व>स्वा[a], वि(चातयस्व)[2] तै २,८,६,८.

वि √ चर्, विचरति गो १, १, २५; विचरन्ति तै २, ४,५,४;६, ९; वि···चरन्ति श १२,४, ४, २; जैमि १,६४; व्यचरत् गो २,६, १४.

वि-चरत्- -रन् श ७,३,१, ३०[1]; तैआ ४,२८,१.

वि-चार- बहुधा°.

वि-चारिन्[b]- -०रिन् गो १,२,१८; -री गो १,२,१०.

?विचर्तुर[c]- -रम् तै २,८,९,२.

वि-चर्षण[d]- -णम् तैआ ७,४,१.

वि-चर्षणि[e]- -णि: ऐआ ५, २, ४; शां २५, ६; श १,५, १, २०; का २, ४, ३, ९;काभ ६० :८; कापा ९४:७; तै १, ४,८,१; २, ५,३,२; -०णे शां २०,३; जैमि ३,१९८; गो २,३,१४.

वि √ चल्>वि-चाचलि[e]- १अ°.

वि-चाकशत्- वि √ काश् द्र.

?वि चाय: तै २,४,३,१३[f].

वि √ चि, विचयत् तै २,७, १२, ४. विचिनोति ऐआ २, १, ७; विचिन्वन्ति श ३, ३, २, ५; ८; विचिन्वन्ति श ९, १, १, २३; विचिन्वन्ति जैमि १,४९; विचिन्वन्तु श ३,३,२,७; ८; का ४, ३,२,६.

वि-चित्[e]- -चित: श ३, ३,२, ७; ८; का ४,३,२, ६.

वि-चित- -त: श ९,१,२,४३.

वि-चिन्वँत्->विचिन्वत्-क[e]- -केभ्य: श ९,१,१,२३.

वि-चेतृ- -ता गो २,६,१४; -तार: श ३,३,२,८.

वि-चिकित्सत्-, °कित्सा- वि √ कित् द्र.

वि-चिच्छिदिवस्- वि √ छिद् द्र.

वि √ चित्, विचेतत् तैआ १,११, ४[g].

वि-चित्त->विचित्त-ग(र्भ>) र्भा[h]- -र्भा तै १, ७,३,३.

वि-चेतन- १अ°.

वि-चेतयितृ- -ता ऐ ६,३५.

वि-चित्र->विचित्र-ग(र्भ>)र्भा[i]- -र्भाम् श ५,५,२, ८;९; का ७, ४,४,१;२.

वि √ चिन्त्>वि-चिन्त्य तैआ ३, १२,७.

वि √ चृत्, विचृ(त>)ता श ७, २,१,१०[j]; वि···चृत तै २,४, २,६.

वि-चृत्य[k] तैआ १०,१,४[l].

वि-चृत्य- १अ°.

वि-चृत्[e]- -चृतौ तैआ २,६,१.

वि-चेतस[e]- -ता: तै २,८,५,८.

√ विच्छ् (गतौ), विच्छाययति[m] श १४,७,१,२०. [अति°,न्या°].

विच्छमा(न>)ना- अति°.

वि-च्छन्दस्[e]- -न्दस: ऐ १, २१[1]; २५[1];५,५[1]; ऐआ १,५, १; तां ८,८, २४; दै २, ९; -न्दा: ऐ ५,४; श १०,३,२,१२.

वि √ च्छिद्, विच्छिनत्ति श १०,२, ३,१८; का ५,६, ५,१०; तै १, ४,४, १०; विच्छिनत्ति श १०, २,३,१८; विच्छिनत्ति जैमि १, १०१[2];३, १७७; विच्छिन्दन्ति श ४,५,२,१०; जैमि २, ४२[2]; २३६[2];३,१२;१३[2];२१; २७९; तां २३, २, ३; विच्छिनद्मि तै ३,७, ६, ७; विच्छिंद्धि जैमि २, ३७०; व्यच्छिनत् जैमि २, ३७०; तां १३,३,१२; विच्छिन्द्यात् ऐ ६, ३०; श ८, १, १, ६; ९; २,३; ६;९; १४, ४, ३,

a) पाभे. वैप१ वि···चातयस्वा ऋ २, ३३,२ टि. द्र.। b) = काबन्धि- [ऋषि-])। c) पाठः? वित° इति शोधः (तु. सपा. ऋ १,१०२,२)। एतदनु वैप१ निर्दिष्टः पाभे. च शोधार्हः द्र.। °रम् इति द्वि१ सत् वा. क्रिवि.। d) विप. (शरीर-)। बस. पूप. स्वरः। पाभे. वैप१ विचक्षण खि १,४,८,५ टि. द्र.। e) वैप२ द्र.। f) शोधार्थं वैप१ ?वि चाव: ऋ ५,७७,२ टि. द्र.। g) पाभे. वैप१ विचेतत् ऋ १,१६४,१६ टि. द्र.। h) विप. (गो-)। i) विप. (गो-)। बस. पूप. प्रकृतिस्वरः। j) पाभे. वैप१ पाशान् पै १९,५,१३ टि. द्र.। k) विवृत्य इति BC; BI. पाठः? यनि. शोधः (तु. पाभे.)। l) पाभे. वैप२ कुम् शौ २, १,५ टि. द्र। m) स्वार्थे आयः प्र. (पा ३,१, २८) धा. स्वरश्च (तु. शं [बृउ ४,३,२०] अनु द्विवेदगङ्गः PW. प्रभृ. च)।

२२; तै १,१,५,७; ४,३,५; ४,७; ७, २; २, १, ४, ९; ३,७,२,३; जैमि १,१००[२]; १०१; २५९[२]; ३१५; तां ७, ३, १०; ष २, १, ५; २, ७; विच्छिन्द्युः जैमि ३, १७७; तां २३,२,२. वि···चिच्छेद जैमि ३,१७७; विचिच्छिदतुः जैमि ३, ९४[२]; छुशा ४३:१०; वि···अछैत्सीत जैमि ३,१७७.

वि···छिद्यते तै १,४, ३,६; गो २,१, ४; विच्छिद्यन्ते तै ३, २, ४, १; वि···छिद्यन्ते जैमि २, ३८५; व्यच्छिद्यत जैमि ३, २१६; विच्छिद्येत श १३,१,६, ३; विच्छिद्येरन् जैमि ३, ३०३. विच्छेत्स्यन्ते जैमि २, ११६; व्यच्छेदि जैमि ३,२१६.

वि-चिच्छिदिवस्- -वान् तां ८, ९, २१.

वि-च्छित्ति- -त्तिः तै ३,७,१,२; -त्तिम् तै ३,२,४, १.

वि-च्छिद्य तै १,४,७, ४; जैमि ३, १८२[२];१९७.

वि-च्छिद्यमान- -नम् श ७, १, २, ११.

वि-च्छिन्दत् - -न्दन्तः जैमि ३, ३३२; ३३३; तां १०,१२,१.

वि-च्छिन्न, न्ना- -न्नः जैमि २, २३७; ३,७२; -न्नम् श २, ३, १,९; तै ३,७,६,१६[a]; जैमि १, १४०; तां ५,९,४; मं २,४,८; गो १,२,११;१३[l]; -न्नस्य जैमि २, २१३; २१५; -न्ना श ४,५, ८, १२; का ५,६, ५,९[b]; जैमि ३,३३३; -न्नान जैमि २, ३५. [°न्न न्ना- १अ°].

वि-च्छेद- १अ°.

वि-च्छेदम्[c] जैमि ३,३३३.

?विच्छिद्वहा[d]- -हा जैमि १,३३३; -हाभ्याम् जैमि ३,३२८.

वि √ च्यु, विच्यावयति तां १९, ७, ३; व्यच्यावयत तां १९,७,१.

√ विज्, विजते शां ३,१[e]; श ७,१, १, १४; विजन्ते ऐ ३, ४. अवेजयत् तां १४,५,१५. [अभ्यप°, प्रति°, सम्°].

विजमान- -नः ऐ ७,१९.

वेग- -गम् तां १४,५,१५. [°ग- अभि°].

वि √ जन्, विजायते श ७, ४, १,२; ११,१,६,२; का २,३,२,७; ३, १, १२, ३; तैआ ३, १३, १; विजायेते श ३ ३,३, ८[२]; का ४,३,३, ७[२]; विजायते जैमि १, २५३; विजायन्ते ऐ ४,९; का ५ ६,७,१.

वि-जात,ता- -तम् जैमि २, ३२४; -ता जैमि ३,३२७. [°त,ता- १अ°].

वि-जामन्[f,g]- -मानः क ३, ६,२, १[२]; का ४, ५, ३, ५[२]; ६,२, १[२].

वि-जायमान,ना- -नः तै २, ३,८, १; तैआ १०, १, ३; -ना जैमि १,२५३; -नाः श ४, ५,५ ६; ९;१०;५,२,१,२४; -नायाः श ५ ३,४,१८.

वि-जावन्[g]- -वा श ७,१,१, २७.

वि-जय-, वि-जयमान- वि-जयिन्- वि √ जि द्र.

वि-जर,रा[h]- -रः श १४,७,२, २८; -रा शांआ ३,३[i]; -राम् शांआ ३ ३[j]; ४[j].

वि-जर्ज(र> )रा[g]- -राम् तै ३, ४, ११,१.

वि-जल[k]- -ले ष ५,१०,२.

?विजवः[l] ऐआ १,४,१; ५,२,१[२].

वि-जहत्- वि √ हा (त्यागे) द्र.

वि-जानत्- वि √ ज्ञा द्र.

वि √ जि, विजयते ऐ १,२४[२]; श २, २,४, १८;४,४, १५; ५,३, १; ४,१; ५, २, ३, ७; ४, ३; ७; १२;१४; का १,३, ४,९; ५,२, १;३,१; २,२,२,२; ५,३,४,३; ७,१,१,६;२,३; जैमि १, ९५[२]; ३, ३९;४१; ६५;१४२; २४८; २७५; तां १६, २, ५; वि··· जयते ऐ ३,१७; १९; तै २, २, ८, १; विजयन्ते तै १,१, १०, ६; तां २३, १०, २; वि····जयन्ते जैमि ३, ३३१; विजयामहे जैमि २, २९१; विजयामहै तां २१, १३, २; व्य(वि-अ)-जयत ऐ ३,२०; ६,११; श २, ४,४,१५; ४,३,३.९; ५,२, ३,

a) पाभे. वैप१ विच्छिन्नम् तै १, ५, ३,२ टि. द्र. । b) सपा. श ४,५,८,१३ वि-वृढा इति पाभे. । c) णमुलन्तम् । d) पाठः? विच्छिन्न-वहाः (<वहस्-) इति C. [जै ११३] पाठं संभावयेत् । e) पाभे. पृ ११७५c द्र.। f) विप. (धिष्ण्य-) । g) वैप१ द्र. । h) विप. (श. का.), व्यप. (नदी-विशेष- [शांआ].) । बस. अन्तोदात्तः (पा ६,२,१८४) । i) सपा. कौउ १,३ विरजा इति पाभे. । j) सपा. कौउ १, ३; ४ विरजाम् इति पाभे. । k) =अनावृष्टि- । l) पाठः? नाप. ( पक्षिणो ग्रीवाया अधोवर्तिन्- ) पक्षमूलभाग- वा अस्थि-भाग- वेति कृत्वा सा. PW. प्रभृ. <विजु- इति, सा. [पक्षे] <वि-जव- इति च ।

७; का ७. १, १, ६; तां २३, १०, २; व्य(वि-अ)जयेताम् ऐ २,३७[2]; श ५, २,४, १२; का ७, १,२,१२; तां २५, १३, ३; व्य(वि-अ)जयन्त श १, ५, ४, ६; २, २, ४, १८; ५, ३, १; ४,१;६,१,१;२, १; ३, ४; ४, १[2];५.२,४, ३;७,१४; का १, २,४,१३;५,२,१;३,१; ६,१,१: २,१; ४,१; २,५,२,६; ५, ३. ४,३.७, १,२, ३; ७; तै १, ६, २,७;७,१,३; व्यु(वि-अु)जयन्त श २,२,४,१८; ६,१,२; ५,२, ४,७; का १, ६,१,२; ७,१,२, ७; व्यजयन्त ऐ १, २४[2]; जैमि १, १०७; १२५[2]; १५६; २, २९१; ३,३९; १४२; ३२८; तां १०, १२,४; २१, १३, २; गो २.४,१५;१६; १७; वि···अजयन्त ऐ ३.१७; तै २,२,८,१.

वि····जिगीषते श २, १, २, १७; वि···जिगीषन्ति का १, १, २, ११; विजिगीषामहै श १,५,४,६; का २,५, २,६; व्य(वि-अ)जिगीषत श ४,३,३,६; का ५,३,४,४;८.

वि-जय्- -यः श १३, २,७,१३[2]-१५[2]; जैमि १,२५८; २, २९१; -यम् श २, २,३,२; ३,४, १; का १,२,३, २;४,१, १; तै १, १, ६, १; ३, १, १; तैआ, ५,८,१३; -यस्य श ४, ३, ३, १५; का ५,३,४,१२; जैमि १, १२५[3]; -याय ऐ ३,३९[2];-येन ऐ ८,७.

विजय्-भाग[a]- -गम् तै ३, ७, ४,६.

वि-जयमान- १अ°.

वि-जयिन्- श्वस्°.

वि-जिगीष- -षः गो १,१,३१.

वि-जिगीषमाण- -णः जैमि २, १३९; -णे जैमि २,१३९.

वि-जिग्यान् ना[b]- -नः श १, ६, ८, २१; २,५, ४,९; ४, ३,३, १७; का १, ५,३,९; २,६, २, १५; ३,१,९,१; ५,३,४, १२; -नम् ऐआ ५, ३, २[1c]; श २, ६, ३, ६; ८; का १, ६,३. ५; ६; जैमि २,१४२; -नस्य श २, ५, ४, १०; -नाः ऐ ३, ४२; जैमि १,१३८; १४२; -नानाम् श २, ५,४,१०; ६,३,२[2]; ४; का १,६,३,२[2]; ४; -नाभ्यः तै १, ७,१,५; -नेभ्यः जैमि ३, १६४.

वि-जित- -तम् श १, ५, ३, २१; २३[d]; जैमि १, १६१; ३,१९५; -ताः जैमि ३, ३१०[2]; -ते श ४,२, २,८[2];१२; ३, ३, ५[3]; १६;५,२,३, ७;४,३; ७; १२; १४; का ५,२,२,५[2];१०;३,४, ३[2]; १२[2];७,१, १,६; २,३; ७; १२;१४; ३,१, ९; -तेन जैमि ३,३२८.

विजित-रूप[a]- -पम् श ४, २, १,७[e].

विजितिन्[f]- -तिनः ऐ २, ३१; -तिनम् जैमि २,२३४; -तिनि जैमि २,२५.

वि-जिति- -तये गो १,२,२४[2];-तिः श २,२,४,१८;४,४,१५; ५,३, १;४,१;६,१,१;२, १; ३,४;४, १[2];५,२,३,७;४,३;७[2];१२;१४; का १,३,४,९;५,२,१; ३,१;६, १,१;२,१;४,१;७,१,१,६;२,३; ७[2]; १२; जैमि ३, ४५[g]; ६५; २४८;२७५; -तिभिः जैमि ३, ३१०[2]; -तिम् ऐ १, २४[4]; श २,२,४,१८[2]; ३,७,१,१७; १८; का १,२, ४,१३; का २, ५,१, १७;१८[2d];४,७,१,१६;१७; तां २३, १०, २[2]; -ती ऐ ७,१८; -तीः ऐ ३,२१; -त्या तां ११, १,४; -त्यै ऐ २,३७; ८,९[2]; तै १,३,५,२; ६,१,७; २,७;७,५; ७, १, ३; ६,८; ९,१;३,२,५, ९; ७, ४, ६; जैमि २, ११७; १२१;१४३;३१८;३,१६;३९[2]; १४२;१७२; गो २,४,१५-१७.

वि-जित्य ऐ ३,२१; शां १,२;१५, २[2]; शांआ ६, २०; श १३,५, ४,१३; तै १,१,६,२; ३,१, १; २,२,७,२;३,१,२,५; जैमि १, १५६;१७२; २,१३९;×.

वि-जित्या- -त्या जैमि ३,१७७.

वि-जिगासत्-,वि-जिगीथ- वि √गै द्र.

वि-जिघ (त्सा>) त्स्[h]- -त्सः श १४,७.२,२८[i].

---

*a*) विप. । बस. पूप. प्रकृतिस्वरः । *b*) गस. उप. कानजन्तम् प्रकृतिस्वरम् । *c*) पाठः? विजिज्ञानम् इति शोधः (तु. K. टि, मूको. °जिज्ञा°) । सपा. जैउ १, २, २, ५ विज्ञानम् इति पाभे. । *d*) सपा. °तम् <> °तिम् इति पाभे. । *e*) सपा. का ५,२,१,५ विदितम् इति पाभे. । *f*) वैप४ द्र. । *g*) °ति इति पाठः? यनि. शोधः (तु. उत्तरं स्थलम्) । *h*) विप. (ब्राह्मण-) । पूप.=नञ् । बस. अन्तोदात्तः (पा ६, २, १८४) । *i*) पाभे. पृ २६० r द्र. । वैप३ गस. इत्यभिप्रेतं तच्छोधार्हम् ।

वि-जिज्ञासा-, वि-जिज्ञास्य- वि√ज्ञा द्र.

वि-जिहासत्- वि√हा(त्यागे) द्र.

? विजुरः[a] ऐआ ५,२,१[b].

वि√जृम्भ्, म्भ्, विजृम्भते श १०, ६,४,१.

वि-जृम्भ(त् > )न्ती- -न्ती ऐ६,३५.

वि√ज्ञप्, विज्ञपयामि श १,४, ५, १०; का २,४,२,१४.

वि......ज्ञपयिष्यामि शांआ ३,१;६,१९; श १४,५,१,१५.

वि-ज्ञप(न > )नी- संचि°.

वि√ज्ञा( > जा), विजानाति श ८, ५, ४, १; १०, ५, २, १५[२]; १२,९,१,१४; १४,४,३,९; ५, ४,१५; ७,१,३०;२,२; ३,२३; विजानाति श १४,५,४,१६;६, २,३;७,१, ३०; ३, २३; २५; विजानाति ऐ ५,२२[२]; ऐआ २, ६, १; ३,१,५; शांआ १४, २; जैमि १, २५८; २६९[५]; गो २, २,१२; विजानते तैआ ६,५,२; विजानन्ति तैआ ३, ११, ५; विजानन्ति का ७, ३, ४, २१; विजानन्ति ऐ ३, ४३; ७, १३; जैमि १,२४९[२];३,२६१;३७६; विजानामि श १४, ७, ३, १४; जैमि १, २५८; विजानीमः श ११,५, ५,१३; विजानात् तैआ १, ११,५; विजानीहि शांआ ५, १; जैमि ३,७२; लुशा ३७:५; विजानीतात्[c] जैमि ३, ७२; १९९; लुशा ३७: १५; ४०: २२; व्यजानात् तै १, ४,१, १; तैआ ९,२,१; ३,१;४,१; ५,१; ६,१; जैमि १, १६०; व्यजानत जैमि १,१३८; १४२; व्यजानन् तां ६, ६, ८; विजानीयात् श १४, ७, ३, २४; २५[३]; विजानीयात् श १४, ७,१,३०; २,१६; ३,२३; तैआ १,३, ३; १०, ११,२; विजानीयात् शांआ ५,१; कासं १४२ : ४; जैमि १, ८९; विजानीयाः श १४,६,५, १; विजानीयाम् शांआ १, ६; विजानीयाम जैमि २, ४१९. विजज्ञे शांआ६,१९;२०[२];विजज्ञौ जैमि २, २७६; विज्ञातास्मः ऐ ५,३०; व्यं(वि-अ)ज्ञासिष्ट,ष्टा३ श १४,८, २, २-४; व्यज्ञासम् जैमि ३,१९९[३]; लुशा ४०: १९; व्यज्ञासिष्म श १४,८,२,२-४. विज्ञायेते ऐ ४, २२; श १४,९, १,१०; काठ ८९: ५; जैमि १, २७५; २, ४१४; गो २, २, ६; वि...ज्ञायते ऐ १, २५; जैमि १, २६९; विज्ञायेते जैमि ३, २१; विज्ञायन्ते जैमि २, १९; १४७[२];३१९.

विज्ञापयति शांआ ७, १३.

विजिज्ञासस्व तैआ ९, १,१;२, १;३,१; ४,१; ५,१; व्यजिज्ञासे जैमि २, ३२९; विजिज्ञासीत शांआ ५,८.

विजिज्ञासां√कृ,विजिज्ञासां··· चक्रे शांआ १,६.

वि-जानत्- -नन् शां २६, ६; श १४, ७,१, २५; ३०;७,३,१८; २३; तै ३,७ ११, ५; गो १,१, १५; -नन्तः जैमि २, ७४. [°नत्- १अ].

विजानती- -ती तै ३,१२,९,६.

वि-जिज्ञासा[d]- -सा श १४,६,१,१.

वि-जिज्ञास्य- -स्यम् श १४, ४, ३, १५;१६[२].

वि-ज्ञा[e]- -ज्ञा जैमि १,८९; -ज्ञाः जैमि १,२६९[२].

वि-ज्ञात,ता- -तः शां ७, १०; जैमि २, ३२९; -तम् ऐ ५, २५; ऐआ २, ३, २[२]; ३, ३, २[२]; श ६, ६, १, १७; १४, ४,३,१५[२]; तैआ३,१,१; -तस्य गो १,३, १९; -ता श १४, ४, ३, १५; -ताः जैमि १, २९३; -ताय श १३,१, ८, ३; -ते श १४,६,५,१;७,३,६. [°त- १अ°].

विज्ञात-त्रैष्टुभ- -भम् शां २२, ७; ८; २३,२[२];६;७; २४,६-८; -भानि शां २२, ७[२].

विज्ञात-वीर्य- -र्यः तै २, ४, १,२.

वि-ज्ञातव्य- -व्यम् शांआ ३,७.

वि-ज्ञाति- -तेः श १४,६,५,१.

वि-ज्ञातृ- -ता ऐआ ३, २, ४; शांआ ८,७; श १४,६,७, ३१; -तारम् शांआ ५, ८[३]; श १४, ५,४, १६;६,५,१; ७,३, २५; -तुः श १४,७,१,३०; ३,२३; -तृ श १४,६,८,११[२].

१वि-ज्ञान- -नम् ऐआ २, ३, २[१]; ६,१; शांआ ५,३[२]; १२, ४; श

---

*a*) पाठः (तु. आन.)? वि-जर-(जरा-रहित- [इन्द्र-]) > -रः इति शोधः (तु. K. [तु. एकः मूको.]; वैतु. सा. वि-दुर्- > -दुरः [=विशिष्टलोकद्वाराणि] इति?)। *b*) ?विजुरो गृणध्यै सतः पाठस्य स्थाने सपा. ऋ ६, ३५, ५ वि दुरो गृणीषे इति त्रिपदः पाभे.। *c*) मपु१। *d*) °ज्ञासा इति Web. पाठः (तु. BW. प्रमृ.)? यनि. शोधः (तु. अच्यु.)। *e*) =विज्ञान-।

३,३,४,११; ८,७,२, १०;११; १०, ३, ५, १३; १४, ५, १, १७;६, ९,३४; ७, २, ३; का ४, ३,४,८; ५,६, ५, ७; तै २, ६,५,५; ३, १०, १, १; ९, ६; १०,२; तैआ ८,५,१[२]; ६,१;९, ५, १[२]; १०,६३, १[२]; ६४, १; जैमि १, १६७; ष २, ८, ९; -नात् श १४, ७,१,३०; ७,३, २३; तैआ ९, ५,१; १०, ६३, १; -नानि श ४, ५, ८, ११; १२,५, २, १२; -नाय श १४, ५, ४, १४; तै २, ५, १, ३; -नेन श १४, ५,१, १७;४, ५; जैमि १, २९३; तैआ ९,५, १; १०,६३,१; तां १,३,९; गो २ ४,९. [°न- १अ°, अति°, वेदान्त°, रस°].

विज्ञान-घन- -नः श १४, ५, ४,१२.

विज्ञान-पति- -तिः तैआ७,६,२.

विज्ञान-मय- -यः शांआ १३, १; श १४, ५,१, १ ;१७; ७, १,७;२,६; तैआ ८,४,१; -यम् तैआ ८,८,५; ९,१०,५; -यात् तैआ८,५,१. [°य- अन्नमय°°].

२वि-ज्ञान- दुर्°.

वि-ज्ञाप(न>)नी- संधि°.

वि-ज्ञाय श१४,७,२,२३;तैआ९,२, १;३,१;४,१;५,१; गो१,१,३१.

वि-ज्ञायमान- १अ°.

वि-ज्ञेय--यः शांआ ३, ७ ; -यम् श १४,७,१,३०;७,३,२३.

विट्-पति-, विड्-वत्- √विश् द्र.

विडूर->वैडूर्य- कनक°°.

वि√तक्ष्, वितक्ष्णोति जैमि१,३३१.

वि-तष्ट,ष्टा- -ष्टः श ३, ७, २, १; का४,७,२,१;-ष्टा तै ३,२,२,२.

वि-त(था>)थ- १अ°.

?वितदश्व->वैतदश्वि- विददश्व- द्र.

वि√तन्, वितनोति ऐ १,४;३,३८; श १, १,१,१२; का २,१, १, ९; तै २, ५, ८, १२; जैमि १, ८१; ३३९; वि···तनुतः तै २, ८,९,१; वितन्वते श ७, २, २, ४[२]; तै २,४,१,६; वितन्वते श ९, २, ३, २७; तै २, ८, ७,१; वितन्वते ऐ १,४; शां २६,१४; वितन्वन्ति श ४,३,५,२१; का ५, ४,२, १२; तां ५,६, १२; वि···तन्वन्ति श ७, २, २, ५; वि···तनुध्वम् श ७, २,२, ५; वि···अतन्वत ऐ १, २०; शां ८,५; वितनुयात् का १, १, १, ७[a]; जैमि १,८१.

विततान तै ३,१२,७,३; वि··· ततान शां ७,१०; श ३, ३,४, ७; का ४, ३, ४, ४[२]; वितेनिरे श ९,२,३,२७.

वितायते तै १,४,६,१; तां १०, ५,६; वितायन्ते जैमि १,८४.

वि-तत,ता[b]- -तः श ९,१, १,६; १४; तै २,८, ९, ५; -तम् ऐ १,२०[२]; ७, ९[२]; शां ८,५; श ३,३,४,७; ११,५,५, १३; का ४,३,४,४; कापा ९४ : ९[c]; तै १,४, ८,२[c]; २,५,५, ३;८,७, १; ३,१२, ३,४; तैआ १, ११, १;६,३,२; १०,१,४;११; जैमि १,८१[२]; ३,५४[३]; तां १, २, ८; १२, ५, ७; ८; -ता जैमि २, ३८९; -ताः कागा १२२:१३[d]; तै ३,१२,८,१; जैमि २,४०४[२]; -तानि तै १, ५, १,१; -ते गो १,५,२५; -तैः तै ३, १, २,१; -तौ जैमि १,५; गो २,६,१३.

वितत-धन्वन्°- -न्वानम् कासं १४१:१.

वि-तत्य जैमि १,३५२.

वि-तन्वत्[f]- -न्वन्तम् तैआ १, १०,३.

वि-तन्वा(न>)ना- -ना तैआ ७, ४,१.

वि-तान- -नम् जैमि ३,३८०.

वि√तप् > वि-तपत्[g]- -पन् तै ३, १०,१,२.

१*वि-तर[b]->वितरम् तै २,८, ६,८; ३,६,३, २; १०,५.

वितराम् श १,४,१,२३; का ४,५, १,१०.

२वि-तर[h]- -रः श १४, ७, २,११.

वि √तर्क् > वि-तर्क- स°.

वितस्ता[b]- -स्तया तैआ १०,१,१३.

वितस्ति[i]- -स्तिः श १०, २, २, ८; -स्तिम् श १०,२,२,८; -स्तीः श १०, २, ३, ११ ; -स्त्याम् तैआ १०,११,२[j]. [°स्ति- त्रि°]

वितस्ति-मा(त्र>)त्री[k]- -त्रीम् श१०,२,३,१४.

---

a) सपा. श २,१,१,१० विहन्यात् इति पाभे.। b) वैप १ द्र.। c) सपा. ऋ ९, ६७, २३ ϕआविततम् इति पाभे.। d) सपा. ऋ १, ३५, ११ सुकृताः इति पाभे.। e) विप. (रुद्र-)। f) वि-त° इति पाठः? g) नाप. (कृष्णपक्षीयमुहूर्त-विशेष-)। h) विप. (पथिन्-)। बस. पूप. प्रकृतिस्वरः। उप. भाप.। i) वैप ४ द्र.। j) वितस्त्यां तु (तु. भा. मैसू. अनु) सतः पाठस्य स्थाने भा. [पक्षे.] वितस्त्यन्ते इति, सा. आन. वितस्त्यान्ते इति च? k) विप. (वेदि-)।

वि√तुद्>वि-तुद[a]- -दस्य तैआआ ६७.

वि-तुदि[b]- -दये तैआ १,३१,२.

वि-तुन्न- -न्नः जैमि १, ७३.

वि-तृतीय[c]- -ये श ६, ५, २,१२; १७[२];१०,२,१,५[४];९.

वि√तृद्, वि॒॰॰॰अतर्दत् तै २, ८, ५,१[d].

वि-तृ(ण्ण>)ण्णा- -ण्णा श५,४, ४,१[e]; १२,९, १, ३; का ७,३, ४,१[e]. [°ण्ण- नवन्°, शत°].

वि√तृष्, वितृषन् श ३,९,४, ७[२f]; का ४,९,४,६[२f].

वितर्षयन्ति तां ५,८,१.

वि √तॄ, वि॰॰॰अतिरत् ऐ६,७;२३; गो २,५,१३;६,५.

वि॰॰॰अतारीत् तै १,७,४,३[g].

वितारयति शां २, १; श ३,१, २,५; वितारयन्ति शां १२,४.

वि-तारयत्- -यन् शां १३,२.

वित्त-, वित्ति- √विद्(लाभे) द्र.

?वित्वावितराह्वयम्[h] जैमि ३, ३३४[२].

वित्वा √विद्(लाभे) द्र.

√वि(<व्य)थ्>विथुर[i]- -रम् ऐ २,७; तै २,८,६,३.

√विद्(ज्ञाने), वेदति जैमि ३,१४१; वेदाम जैमि ३,३५६.

विदे[j] ऐआ ४, १, १; श १०, २, ६, १५; विदन्ति गो १, २, ९![k]; वित्से तै २, ८, ३, २; वित्थ श १३, ४,२, १७; जैमि २, ४२८; विद्महे तैआ १०, १, ५[१]; ६[५];७[३l]; ४६, १; जैमि २, १२६[२m]; विद्मसि ऐ ७, १८; विद्रः ऐआ ४, १, १[३n]; तै ३, ६,१, २; विदाः ऐ २,२; जैमि ३,२५४.

वेद,>दा[o] श १, २,३,७; ५, ७;१९; २१;×; २,१,३,९;२,३, १;×; ३,१,२,१७;×; ४,६,७, २०;५,१,१,४;×; का १,२, ३, १;×;२,६,१,२१[p];×; तै १, २, ४,३[१]; ३,२,३; १०, ३;५, २, २;१२,५;६,६,६;७,५,३; १०, ५; २,१,१,२; २,३; १२;५,४; ८;९[२];४, ८,७[q]; ×; तैआ १,५, २;६,२[r];८,७; ९,२[r]-४[r];१०, ७[r];×;२७,३[r];३१,५[r]; ×;७,३, ४[r];×;८,६, १[२s];९,१;९,१०, २[r]; वेदऽवेद श १४, ६,७, ५; वेद,>दा ऐ १, १[x]; २[२]; ५; ८-१२; ऐआ १,१,२;३[१]; ४[८]; २, १;×; शां १, २; २,८[३]; ६, २-८;×; शांआ १,८;३, १[२]×; श १,२,२,१०;८, २,४; २,३, १,१३;×; का १,१,३,८; ३,१, ७[२]; २,२,१,७; ×; काअ १७ : ३;२१ : १२[२]; काआ ७५:१०; कागा ११९:९; १२०:८; १२३: १०; १२४ : १९; काचू ७१ : १०; काप्रा ७०:६ ; कासं २७ : ८; कास्वा ८०:१०; तै १, ३, ५, १; २, २,७, ४;×; आ १[२]; जैमि १,४;८;१९;×;२,६;८;×; ३, १२०; १२२;×; तां ३, ७, २; ४,१,३; ५,४;८,१०; ५,२, २;×; दै १, २६; मं १, १, २; ५, १० ; ११ ; २,१, १५ ; ×; लुशा २५:१३; ३४ : ३; ष १, २,११; ३,१४;१५; ४,१५; २, १,२३;×; सं २;५[२]; सा १, १, ७; ९;×; गो १, १, ३-६; ८-११; ×; २,१,७[२];×;६,६[२t]; ×; विदतुः जैमि १,१२६; विदुः श १,८,३,२०; २,१,१,७[२]; १०, १,४,९;×; तै १, २,१,२६; ४, १, २;२,२, १०, ३;३,१०, ९, १३;१४;×; विदुः ऐ २,१;१३; १९; ३,१२; ३१; ७,१२; १३; ऐआ २,३,२; ३,१,५;२,५; शां १४,३; शांआ ७,१४; ८,९; श १, १,१, ७; २,१,४,१; ३, ३, १३[२]; ३,७,३,४; ४,१,३,१७; ३, २,१२;१३; १०,४,४, ४[२]; १२,६,१,४१;१४,८,१,१; का १,१,१,५;४,१; २,१,१, ६;×;

---

*a*) नाप. । गस. उप. कर्तरि कः प्र. (पा ३,१,१३५) । *b*) विप. (कौबेर-) । गस. उप. कर्तरि इक् प्र. उसं. (पाउ ४,१४२) । प्रकृतिस्वरः । *c*) विप. । बस. अन्तोदात्तः उसं (पा ६,२,१८४) । *d*) पाभे. वैप१ वि॒॰॰॰अदर्दः ऋ १०, ६७, ७ टि. द्र. । *e*) पाभे. वैप४ वितृण्णी- टि. द्र. । *f*) पाभे. वैप१ वितृषन् मा ६, ३१ टि. द्र. । *g*) पाभे. वैप१ नि॒॰॰॰अतारीत् मै २,६,१२ टि. द्र. । *h*) वित्वा, वितराम्, ह्वयम् (=ह्वानम्) इति त्रिपदः शोधः विमृश्यः । *i*) वैप१ द्र. । *j*) आत्मनेपदे तन्लोपः ( तु. K. ; वैतु. सा. मपु१ इति) । *k*) पाठः? विन्दन्ति इति शोधः (तु. मूको.) । *l*) पाभे. वैप१ धीमहि मै २,९,१ टि. द्र. । *m*) सकृत् जै १३८ विद्म इति पाभे. । *n*) तु. K.; वैतु. सा. विद्रु>द्रा इति । *o*) प्रपु१ वा उपु१ वा । *p*) पाभे. पृ ११७५*e* द्र. । *q*) पाभे. वैप४ वेत्थ अप्राय २,४ टि. द्र. । *r*) वेदु इति पाठः? *s*) सकृत् वेदु इति पाठः. ? *t*) पाठः? विदुः इति संभाव्यते ।

कागा १२०:११; कापि ६८ : २;७; कास्वा ८०:११; तै १,५, २,२[२]; २,८,८,६; ३,१,१, ८; तैआ १, २७, ५;२,११,१; ५, ११,१;५;६,९,१; ८,६,१;१०, १,३; जैमि १,२५६; तां १, २, ९; ६,६, १७; २०, १५, १०[२]; ११[२]; ष ३,७,१६; गो २,२,७; वे॒त्थ,>त्था श १,४,५, १०[a]; १०,३,३,२–५; ४,१;२[१]; ३[८]; ४[२];५[८];६,१, ५–९; ११,३,१, २;४;५, ३,९–१२; १२, ४,४, १; का ३,१,४, ३;४; तै ३, ७, २,५;११,५[२]; १०,९,३[२]; तैआ २,६,२; वेत्थ,>त्था ऐ ७, ८; २७;२८; शां ७,४; श १०, ३, ३,१–५;६,१,४–९; ११, ५,३, ९–१२; ×; तै ३, १०, ३, १; तैआ १, ८, ५; जैमि १, १९[२]; २५६ ; ३०२ ; २, ५३ ; ३, १०५[२];×; सं २, ३,१९; ष १, ६,१९; गो १,३, ११[२];५, २; वेत्था॒३ तै ३, १०, ९,३[१]; विद॒ श ९,५,१,४७[b]; तै २,४,३,९; ३,७, १३, ३; विद्म॒,>द्मा॒ श ६,७,४, ४[४]; तै २,८, २,६; ३, १,१, ७; तैआ ४, ११, ७; विद्म,>द्मा श ३,२, ४,५[२]; ४, १,३,२; ६,५,३; का ४,२, ४, ४[२]; तै २, ८, ३,२; तैआ १०, १, ५; जैमि १, २३४; २७९; २९१; २,४५;×; ३, १५६; तां २१, ३,७[३]; लुशा १५ : १; ष ३,७,१६; गो १,१,३८;३,२०; २१; वे॒त्तु श १,५,२,१[२c];४,१, ३,२; ९,१, २,२२; तै ३,५,४, १[d];वेत्तु श १,५,२,१[२e];९,१,२, २२[१];तै३,५,४,१[f,c]:विद्धि श१, ४,५,४;४,१,३,३; का २, ४,२, १०; ५,१,३,२; तै ३, १०,९, १५[२]; ११,४; तैआ १,११, ६; वित्ता॒त् तै २,७,१२,४; वित्तात् श ३, ७,१,९[२]; ४,३, ३, १९; का ४,७, १,७;५,३, ४,१४; तै ३,१, १,८; वित्त का ४,२, १, २७;६,२,३, ९; वे॒दानि तै २, ५, ६,५; वेदानि श १, २, २, १४; २,३, १, १६; ११,४,१, ३; का १, ३,१, ९; २,२, १, ११; वेदाव श १, १,४, १५; १६ ; वेदाम तै १, ६, ७, ५ ; अ॒वेत् श १,९,१,२५;२६; का २,८,२,१०[२];११; अवेत् ऐ २, २५; ३,२०[२]; श ६,१,१, १४; ४,१; ११,१,६,९ ; १४,४,२, १०;२०; २१; लुच १०४:१०; जैमि १, १०६; १२५ ; २९९ ; २,१४८;×; तां ७,२,२; लुशा २५ : ११; १२; गो २,१,१७; अवित्ताम् जैमि ३ ३१६ ; अविदुः श ३, २, ४,[g];४,२, २[g]; ३, ८[g] ×; का ४ ७, ३, ३; काअ १४ : ४ ; जैमि १, १५८;२६२; २,१४८[२]; ४१८; गो १,३, १५[२]; २,२,७; अ॒वेः[h] ऐ २,२०; श ३,९,३,३१; का ४,९,३, २४; अवेदम् ऐआ २, ५,१; वि॒द्यात् श ४, ६,९,१८; ६, १,२, २४;८,४, ४,१२; ७, २, १८; ×; का ५, ८, ३, ६[१]; १६[१]; तै २,३, ९, १; तैआ १, २,२; ४;४,२; ३,१३,२; ६,५, २; विद्यात् ऐ ५,२२[१]; ६,२१; ७, २८; ऐआ १, ५, २[२]; २, १,२;×; शां १३, ३; शांआ ५, ८[१०];७,९;×; श १, ५,३, २३; २, ५,३,१८; ३,३, ४,११; ४, ५, ८,११[४];×; का १,१,३, ८; ५, २,१७;×; २, ५,१, १८;×; आ १; जैमि १, १[६]; ५१[२]; ×; २, ४०[२];६०; ६६ ; ३, ३७२[१]; तां १६, ११,१; दै २,५; ष ३, ९,१[४]; सं १[२]; सा ३,४,६;१०; गो १, २,११;१६[३]; ३,२; ७[६]; ८;२,२,१५; ६,३; वि॒द्युः श ५, १,१, १०;१३,४, २,१७; १४, ४,२,२२; का ६,१, १,७; जैमि २,४३०[१२]; विद्याः ष १,७, २; विद्यात जैमि २, ४२८; विद्याम् श ११, ५,३,११; १२; जैमि २,१४८.

?विवित्से[1] तैआ ३,११,५.

विदु॒त् श ३, ५, १, ३२; विदुः का ४,५,१,१८–२०.

वेदि॒ता श ११,२,७,१२; वेदिष्यति तै १,६,७,४; वेदिष्यन्ति श ३,७, ३,४; का ४,७, ३, ३; वेदिष्यामि श १२, ९, ३, ४; वेदिष्या॒वः श १४, ६, २,

---

*a*) पाभे. पृ १८७ *f* द्र. । *b*) Web. विद इति मुपा. शोधः (तु. मुं. अच्यु., सपा. मा १८,६० च) । *c*) सपा. का २,४,४,१ वे॒तु इति वेतु॒[२] इति च पाभे. । *d*) सपा. श १,५,२,१ वेत्तु इति पाभे.; वैतु. आन. BC. च वे॒तु इति । *e*) सपा. का २,४,४,१[२] वेतु इति पाभे. । *f*) वैतु. BC. वेतु इति । *g*) पाभे. पृ १२६९*c* द्र. । *h*) तु. K.; वैतु. भा. सा. Haug<√विद् (लाभे) इति । पाभे. वैप१ अ॒वेः टि. द्र. । *i*) लेटि सिबागमे प्रपु३ आत्मनेपदे सल्लोपः (तु. भा.; वैतु. आन. आविवित्से इति मुश्रे. (तु. स्वरः BC. च)) ।

१४; का ४,६, २, ३; अवेदिष्ट ऐ ६, १४; अवेदिषुः श १, २, ३,३; का २, २, १, १७; जैमि १, २६२; अवेदिषम् श ४, १, ५,७; अवेदिषम् श ११, ५,३, १२; अवेदिष्म का ५,१,५,५; ?अवेदी[a] श १४,७,२,१५.

वेदुयते श १४,६,२,९; वेदुयिते[b] तैआ १, ७, ३; वेदयति तैआ १०, ६३,१; वेदयन्त शां ८, ३; १३, ९; कासं १३८ : २०; जैमि ३,२३५;३८१; सं ३; गो २,३,८; वेदुयसे श १४,६, ११,६; वेदयेत जैमि २,१९७[२].

विविदिषन्ति शांआ १३, १; श १४, ७, २, २५; विविदिषामि श ११,५,३,१.

विदां √कृ, विदाञ्चकार ऐ ७, १; श १, ९,१,२४;२५; २,२, ४,६; ४,१,५,५[c];४; का १, २, ४,५; २,८,२,१०[२]; ५,१,५,४; तै ३, ९, १५, ३; १०,९,१०; ११; १२, ५, ३; तैआ २,१८, १; जैमि १,३६३; २,५५;२७२; गो १,३,१८; विदाम्‌ ··· चकार जैमि १, ७५; विदांचक्रुः श १, २, ३,२; ४, १, ३४; ६,४,१[d]; २, २,४,१२; ३,४, २;४,४,४; का १, २,४,९; ३,४, २;४, १, १;२,२,१,१६;२,३,४,२४; ४, २,४,४;५, १, ११; विदांचकर्थ ष१,६, १६; विदांचकर श १४, ८, १५, ११; विदामक्रन् तै १, ३,१०,३.

वेदयां √कृ, वेदयांचक्रे ऐआ ३,१,१; शांआ ७,२;८,१. [अति°, अनु°, अभि°, आ°, नि°,परि°,प्र°,प्रति°, वि°,व्यव°, सम्°, सम्-अनु°, सम्-प्रति°].

१विद्– अथर्वाङ्गिरस्°,अहर्°,आ°, आख्यान°, आत्मन्°, इत्थम्°, इदम्°, उक्थ°, ऋच्°, ऋच्°°, एकधन°, एवम्°, किम्°, क्रतु°, गायत्री°, ज्योतिस्°,तद्°, देव°, देवजन°, नि°,पद°, पुरा°,बहु°, ३ब्रह्मन्°, भूत°, भृग्वङ्गिरस्°, मति°, मानुष°, मित्र°, यजुस्°, यज्ञ°,यातु°,लोक°,वचस्°,वयुना°, विश्व°, वेद°, षडङ्ग°, सम्°, सं-प्रति°, सर्प°, सर्व°, सामन्°, सुवर्°, सुवर्ण°, स्वर्°, होत्रा°]

१विद– सम्°.

विदुथ°– -थम् तै ३, ६, १२, १; –थस्य काम ६१:१५; तै३,११, ६,३; जैमि ३, ८८; –थे ऐ २, २; ४,३; शां ८,५; २५, ७; तै २, ४,३,१०;८,१,६; ५,१; ६, ९; ७,६; ३, ६,१,३; ७,९, ६; तैआ १०,३९,१; –थेषु शां १९, ९; तै १,२,१,१३; २,८,५, ९; ३,६,३,४;८,३,४.

विदथ्य°– -थ्यः गो २,६,१२[२]; –थ्यम् तै २,८, ३, १; –थ्याय ऐ १, २८.

१विदान– प्रति°, सम्°, सु°.

विदित– -तः श ७, २,१,११; ९, १,१,१७; –तम् श ११, ५,३, ८–११; १४,४, २,२९; ५, १, १४;४, ५; ७,३,६; का ५, २, १, ५[f]; –ताः जैमि २, ३९; –तात् जैमि १, २९१; –तानि जैमि २,३९[२]. [°त– १अ°, दुर्°, प्रतिबोध°, सु°].

विदित्वा शांआ ४, १४[२]; श १४, ६,४, १;८,१०;७,२, २५;२८; तै ३, १०,११, ५; १२, ९, ८; तैआ १,१०,३;११,७; जैमि १, ७९; १९०; २२०; छुशा ५८ : ३. [°दित्वा १अ°].

?विद्मन्°– -द्मना शां २१,३; तै २,८,२,४.

विद्मन्->विद्मना(न-अ)पस्°– -पसः ऐ ४, ३२; शां २०, ४; २२,२; –पसम् तै ३, १,१, ९.

१विद्य निर्°, सम्°.

विद्या°– -द्यया ऐ ५, ३३[१]; ८, २३[१]; शां ६, १२[२]; श २, ६, ४,२; ४–७; ६,१,१, १०; ३, १,१०;१०,२, ६,१५; ३,४,५; ४,३,९[२];४,३;५,१,४;३, १२; ४,१६; ११,५,८,७; ६,१, १[२]; १२, ३,३, २; १४,४, ३, २४; का १,६,४, ३–८;७,५,३,५[g]; ८[h]; १२[२h]; तै ३,२, २,२; १०, ११, ६ ; जैमि १, ३५८; २, ३८; सं ३[१]; गो १,३,१३[५]; ५, २५; –द्या ऐ ५, ३३; शांआ ७,८; श १,१,४,३;४,२,३,८[२]; ६,७,१[२]; २; १५–१७; ५, ५, ५,६; ६,१,१,१०; ३,१, ११[१]; २०;७,५,२,५२;९ ३,३, १४[२]; ५, १,१८; १०,३, ५,१३;४,

a) पाठः? कर्मणि लुङि ⌊प्रपु १⌋ अवेदि इति शोधः द्र.(तु. वैप३ अवेदि ⌊बृउ ४,४,१४⌋ टि.)। b) वावि. <°दुय° इति। वेदयि° इति स्वरः? c) पाभे. पृ ९७७ j द्र.। d) पाभे. पृ १२६९ b द्र.। e) वैप१ द्र.। f) वि° इति मुपा. स्वरः शोध्यः। पाभे. पृ १३२८ e द्र.। g) त्रय्या विद्यया> सपा. श ५,५,५,५ वेदैः इति पाभे.। h) सपा. श ५,५, ५, १०; १५ वेदेन इति यक्र. पाभे.।

३,९; ५,२,२[२]; १४,४,३,२४; ८,१५,२;९; ९,१, ११; का २, १,३,८; ५,२,३,५[२]; ८,४,१[२]; २; १२[२];१३[२]; ७,५,३,५; ८[a]; ९[b]; तै ३, २,२, २; १०, ११, ५; तैआ ७,३,३; ९,६,१; १०, १३, १; ६३, १; जैमि २, २९; सं ३; गो १,३, १३[१]; –द्याः श १, ६, ३, ८; १५; ४, ६, ७, १४; ११,५,६, ८[२]; १४,५, ४, १०; ६,१०,६; ७,३, ११; का २,६,१,८; ५,८,४,१; जैमि २, २४; २६२; २९२[१]; –द्यानाम् श १४, ५,४, ११; ७,३, १२; –द्याभिः श ११,५,३, ८–१२; –द्याम् ऐ ७, १८; शां ६, १०; १२; श ६, १, १, ८; ७, ५, २, ५२; १०, ४, २,२२;३०; १४,६, ३, २४; का २, ५,२, १९;६, १, ५; ५,८, ४, १३[१]; कास्वा ८० : ६; तै २, २, १, ३; तैआ २, ११, १; जैमि १,३५७; सं ३[२]; –द्यायाः का १, ६, ४, ६–८; का ७,५, ३, ७; –द्यायाम् श १०, ४, २, २१; २२; –द्यायै ऐ ५, ३२[२]; ८,११; शां ६,१०–१२[b]; शांआ ४,६; श २, ६, ४, ५; ५, ५, ५,९; ११,५,४,१८;८,४; जैमि १, ३५७; ३६३; २,२६९; –द्ये श ४,६,७, १४–१७; का ५,८, ४,१३[२]. [°द्या- १अ°, अधि°, आत्मन्°, देवजन°, ३ब्रह्मन्°, यजुस्°, यथा°, वयस्°, संध्या°, सर्प°, सर्व°].

विद्या-कर्मन्[c]– -र्मणी श १४, ७,२,३.

विद्या-चित्[d]– -चितः श १०,५, ३,१२.

विद्या-वत्– -वान् गो १,२,१४.

विद्वस्[e]– -दुषः ऐ २, ३; ३, २; ऐआ १, ३, ४; शां १४, ३; शांआ १,८[२]; ७,१५; श १, १, ४, १७; ३, ५,१२; ४,१, २३; २४; २६;२८;३५; ४०;६, १, २१;७,२,८; ३, १८; २, ३,२, ६;८; ३,९,३, १४[२]; ४,५, ३, २; ३; ४, २; ५;१२;५, ३,५, ४; ८,५,१,१७; १०,४, ४, ५; ६, २,१०;१२, ४,१, ११[१]; ९, ३, १०–१२; का २, १, ३, १९; ३,४,१८–२१; २५; ३०; ६,४,८;७,१,१५;४,९,३,१२[२]; ५,६,१,३;२,१;४; ८,२, ४; ७, २,४,४; काअ १७:३; तै १,३, १,२;४,१,२; ६,६,५;२, १,२, ३; ८;६,५;८, ३;१०, ३; ११, १;२,८,६; ३,२,९,७; तैआ ५, १०, २; ८,७,१; १०, ६४, १; जैमि १, ३२३; ३५७; ३६४; लुजा १०७:१३; ष २, ७, ९[२]; गो २, २, १०; –दुषा ऐ ५, १४; शां २७, १; का ५, १, ३, ६; तै २,४,३,९; ३,१०,९, ६; तैआ १, ६, ३; गो १,१, ३७; –दुषाम् ऐआ ३, १, ६; श ४, ६, ४,३;१२,१, ३,२२; २,२, २; गो १,४, २०; –दुषे ऐ ३, २८; ८, २३; श १४, ८, १३, २; तै ३,७,१०,६; तां २१,१, ४;६;८; –द्वांसः ऐ ४,१३;२५; ५,२; ४; १०; १५; १६; २४[२]; ऐआ ३,२,६; शां २४,३; शांआ ४,५; ८, ११; श ३, १, १,५; ७, ३,१०;९, ३,१४; ५,१, १, १०;७,२,४; ८,६,३,१८; १०, ६,१,१०; ११,५,५, १२; १२, १,१, १०;११;२, ३,१२; १४, ७,२,२६;९,२, ८; ९;१०; १२; १५; का ४, १,१,३;७,३,६;९, ३,१२; तै ३, ११, ८, ८; तैआ १०,६२,१[१]; तैआआ५९;जैमि १, ३४९; २,१०;१४;३३४;३४२; ३७०;३७२; ३७४; ४००; ×; तां १,६,१०;१४,१,१३;गो १,१, १३;३८; ३,१;४, १३; २३;५, ११;२,६,१०; –द्वांसम् शांआ १, ८;४,८; श १,४, ३, २२; ११, ३,३, ७; १४, ८, ६, २; कास्वा ८२ : १८; तै २, २, १, ३; तैआ २,१५,१; जैमि १,११; १८; ५०; ९८;×; तां १०,२,७; ष२,३,१०; –द्वान् ऐ १,५[७];६; ७;८[४];९;२२; २८;२९[२]; ३०[१]; २,१[२];२;१०; १७;×, ऐआ १,१, ३;४[c];२,१;२[२];५,२[२];३[१];२,१, ५; ८;×; शां २, ८[२]; ५,३; ६, १०; १२ ;×; शांआ ३, ४[२]; ४, १४;×; श १,१,१,५;२,५,२६; ४, ३,२;६, ३,१५; ३०; ३७[२]; ४, ९;८,१,११; २,१,२, ६;×; ९, २,३, १२[f]; ×; १४,९, ४, २४; का १, १, २, ३–५; ८; १०; ११[२]; ×; काअ ७ : ५; १७ : ४; काअमा २४ : २; काउ ४७:६; ४८:३; ४९ : २; ४; काग्र २९:२; ३०:४; ३१ : २; काश्रा ५६:४; कासं १४२ :

a) सपा. श ५,५,५,१०; १२ वेदः इति यक. पाभे. । b) सपा. शांआ २,१ वेदानाम् इति पाभे. । c) द्वस. अन्तोदात्तः । d) तु. टि. अग्नि-चित्- । e) वैप१ द्र. । f) पाभे. वैप१ देवः तै ४,६,३,३ टि. द्र. ।

३; कास्वा ७८:४; ×; तै १, १, ५, १;७,१;८,५; २,१,९; २२; ३,२,३;४,९, ५;१०,३; ७; ९; ५, ३,४[२]; ६,५–७; १२,५; ८, १०, ३;२,१,२, २; ×;७, १७, २[a];×; तैआ १,८,८;×; ३, १२, ७; १३, १; ५, ११, २; ६,१, १[२b]; ८,४,१;६, १;९,१[२]; १०, १, ३[२०];११; ६३,१; ६४, १[२]; आ १; जैमि १, २; ८–११; १३;×;२,४;×; ३,२;×; तां ६, ९, २१; ७, ७, ८; १०,१५; ८, ८, १५; १०, ५, १५; ×; मं १,५,१३; छुशा ५८:२२; ष १,६,५;७,२; २,२,३; ८;७,९; ३; १, ३१; ३५; ४, १, १६; २,१;३,५; सं २; गो १, १, ५; ६;८;१०;×;२,१,७; २६;२,१; ५;७–९;×. [°द्वस्- १अ°,अनु°, इत्थम्°, एतद्°,प्र°, यद्°,सु°].

विदुषी– -षी तै ३,१२,९, ५.

?विद्वज्-जन[d]– -नस्य जैमि ३, ३५३.

१विविदान– -नाः ऐ ५,२८.

१वेद[e]– -दः ऐआ ५, ३,२; शांआ ४,११; श ५,५,५,१०[f]; १२[f]; १३, ४, ३, ३; ६–११; १२; १३;१४; १४,४, २,२८; ८,१, १; ९,४, २५; काअ ४:५;१८: २; तैआ ४,४२,५; १०,१,१६; जैमि २, २६२[३]; ३, ३४०; ३६१; ३७१[२]; ३८०; मं १,५, १७[g]; गो १,१, ५;८; ९; –दम् शांआ १४,१; २; श १४,९,४, १३; का ४,२,४,४; ५,८,४,१; कास्वा ८२: १८; ८३:६; तैआ २, १५, १; १६, १; ७, ११, १; जैमि २,५५;२४३; ३ ४१[२]; १०४;३६३;३८०; तां २०,१५, १०; ष १,३,१६[२]; गो १,१,५; ८; –दयोः श १०, ४,२, २४; का ५, ८, ४, १; –दस्य ऐआ २,७,१; आ १; जैमि १,३२२; ३५८; २,४०९; सं ३; –दाः ऐ ५,३२;६,१५; ऐआ १,३,२;२, २,२; ३,१, ६; २,४; शांआ ७, १९;८,५; १३,१; श १०,४,२, २५;११,३,३,७;५,८,३;१२,३, ३,२;४,९; ११; १४,४,३,१२; ६,७,१८[२h];७,१,२२[h];३,६[२h]; ७[२h]; ९,२,४; काअ ४:४; कासं २५ : १; १३८ : ९; तै २,३, १०,१;३,१०,११,४[२]; तैआ ३, ११,१;७,५,३; जैमि ३,३७१[२]; ३७९; ष ४,४,१८;७,२; गो १, १,२९;३१;३३[२];३७–३९;२,९; १०;१६[२];३,१६;४,२४;५,२४; २५;२,६,७; –दान् कासं १३७: ४; काउ ४७:५; तै २,३,१०,३; जैमि २,७९; ष१,५,७; गो१,१, ६[२];१०[२];१६[२];२९; ३१[२]; ३२; २,९;१८;२४;३,१; –दानाम् ऐ ५, ३२; ऐआ ५,३, २; शां ६, १०; शांआ २, १[i]; श १२,८, ३, २३[२]; १४,५, ४,११; ७,३, ६[h]; १२;काअ४:५; काउ ४७:६; ५१:३; तै २, ८, ८, ५; जैमि २, ६६; गो १, १, १४; २५; २७; ३८; ३, ३; १९; ५, १६–१९; २, ५, ७[२]; –दे श १२, ३, ३, २; गो १, ५,१०; –देन श ५,५,५, १०[j]; १५[j]; तै २, ६, २, ३; जैमि १, ३५८[२]; –देभ्यः श१४,६,७,१८[h]; वं १; गो १,१,३०;–देषु श १२,३,४, ११; १४,६, ७,१८[h]; सा १,२, १०; गो १,१, ३८; ३९; २,५; २४;३,१;१६;५,२४;२५[२]; –दैः शां ६,११; श ५, ५, ५,५[k]; तै ३,१२,९,१; गो १,१,६[२]; १०; ३७; ३,२;४,२४; ५,२४; –दौ शां ६,११; श १०,४, २, २४; १४, ९, ४,१४. [°द- १अ°, अथर्वन्°. अधि°, अधीत°, १असुर°, इतिहास°, ऋच्°, चतुर्°, जात°, त्रि°, देव°, पिशाच°, पुराण°, प्र°, ३ब्रह्मन्° यजुस्°, सर्प°, सर्व°, सामन्°, सु°].

वैदिक[l]– -केन ऐआ ५, ३, ३.

वेद-धा(तृ>)त्री[m]– -त्री कागा ११९:१०.

वेद-पारग– -गः गो २,२, ५.

वेद-पुरुष[n]– -षः ऐआ३,२,३[२]; शांआ ८,३[२].

वेद-मय– -यः ऐ १, २२; का ३,२,१०,११.

---

*a*) पाभे. वैप१ विद्वान् शौ ६,६८,३ टि. द्र. । *b*) प्र [स्वाअ.], विद्वान्>पाभे. वैप१ प्रजानन् ऋ १०; १७,५ टि. द्र. । *c*) पाभे. वैप१ भुवनस्य खि ४,१०,१ टि.द्र. । *d*) पाठः? विद्वज् (?विध्वग् [तु. मूको.]) जन° इति संभाव्येत [तु.संटि.]। *e*) वैप१ द्र.। *f*) पाभे. पृ १३३४ *a* द्र.। *g*) पाभे. पृ ३२१ *d* द्र.। *h*) वेदु इति स्वरः? *i*) पाभे. पृ १३३४ *b* द्र.। *j*) पाभे पृ १३३३ *h* द्र.। *k*) पाभे. पृ १३३३ *g* द्र.। *l*) विप. (अध्याय-)। *m*) विप. (गायत्री-)। *n*) मलो. कस.।

?वेद-माता[a] तैआआ ३६.
?वेदरदसिकी[b]- -की गो १.१, २७.
वेद-विद्- -वित् श १४, ६, ७,४; -विदम् गो १, ३, १५[c]; -विदि काश्वा ८३:२; तैआ २, १५,१; -विद्भ्यः काश्वा ८३ : ३; तैआ २, १५, १. [°विद्- १अ°].
वेद-शरीर- -रैः ष ४,१,३.
वेद-शिरस्[d]- -रः शांआ १३, १.
वेदा(द-आ)त्मन्- -नाय तैआ १०,१,६.
वेदा (द-आ) दि- -दौ तैआ १०,१०,३.
वेदा(द-अ)धिपति- -तये काग्रह ४६:५.
वेदा(द-अ)ध्यायिन्- -यी कासं १४२: ३.
वेदा(द-अ)नुवचन- -नम् तैआ ७,१०,१; -नेन शांआ १३,१; श १४,७,२,२५.
वेदा(द-अ)न्त- -न्ते तैआ १०, १०,३.
वेदान्त-विज्ञान-सुनिश्चिता- (त—अ) र्थ[e]- -र्थाः तैआ १०, १०,३.
वेदो(द-उ)पनिषद्- -षत् तैआ ७,११,४.
१वेदन- आ°.
वेदना[f]- -ना तैआ १,८,२.
वेदयत्-, वेदित- नि°.
वेदितव्य, व्या[g]- -व्यः शांआ ६, १९; -व्यम् श १४, ८, १, १; जैमि ३, ३३८; -व्या श १२, ३, ५, १२; सं २; गो १, ५, ६: -व्याः शां २,२.
वेदितुम् श ३,६,२, ६; वेदितवै श ११,६,२,५.
वेदितृ- -ता श १४, ६,९, ११- १८. [°तृ- अनु°].
वेदुक[a]- -कः तै ३,९,२२,२.
वेद्य सम(म्-अ)नु°.
१वेद्य- -द्याः जैमि ३,१५६. [°द्य- नि°].

✓विद्(लाभे), विदे तै २, ७, १३, २[h]; विद्यात् श ४,६, ४, ६; विद्याम तै २, ८, ४,८; जैमि ३,२०३.
विविित्स तैआ २,६,२[i].
विन्दते श ३, ३, ३, १५; १६; ५, २, १, १०[२]; ९,५,१,६८; ११, १,६, २३[२j]; ४, ३, २०; १२,७,२,२;२, १४, ७,२,२९; का ४,३,३,१३; ६,२, २,९; तै २,१,५,८;९; ३,९,२; ३,३,९, ११; ११,१; ११,९, २; १२, ५, ३; तैआ ८, ७, १; विन्दते ऐ ५,३०;७,१३; शांआ ६,१२; श ७, ३,१,१९; ९,५,१, ६८; १४, ४,२,१८; तै १, १,४, ६; २, ८,८,३;६; ३,१,४, १२;५, ३;११; तैआ १०,३९,१; जैमि १, १०८; १४१; १५५; ×; ३, २४; ×; तां २, १०, ३; ६, १०, १९; ८, ५, १०; ८, २३;१०,३,७;७,२; १२,५,२५; १२,११,२५; १३,१,३;७; १४, ५१, २३[२]; १५, ३, ७; ४,८; १८, ५, ८; ९; १०; मं २ ४, १[२]; सा ३, २, ६; विन्दति श ५,२, ३,२; ७, ३,२,१५; १३, ३, ८,६; १४,४, २, २९; ३१; का ४, २,२, १४; ६,४,३[१]; ९, ३,१७;७,१,१,३; तै ३,९,१७, १;विन्दति ऐ ७,१५;८,१९; श ३,५,३,२५;६,१, २५;४, ६,८, १२;५,२,३,५; ६,३, ३,६; का १,४,१,१७; ४, २, २,१४; ५, ३, २३;६,१, २५; ७,१,१, ३; ४, १४; कापा ९४:५; तै ३,९, १५, १; जैमि १, २६६[१]; ३, ११०; १६६; तां १९ ८ १;३; ५;९,१; ३; विन्दती३ तै २, ५, ५, ६; विन्दतः जैमि ३, १७[२]; विन्दन्ते जैमि ३, २४[k]; ८१; २४५; गो १, ४, ६; विन्दन्ति श ४, ५, २, १[२]; १०,१[२]; ६, ९, १२; का ५,८, ३,११; विन्दन्ति श २, १, १, ५[l]; ३,४,२३[२]; ५,१, १४; ५, ४,५,४; ६,३, ३, २; का १,४, १, २६;३, १२; तै ३, ९, १३, २[m]; जैमि १,३५४; २,११; ३, १९१; तां ९,५,४; १३,९,११; ११, २०; १९, ८,२; विन्दामि जैमि २, १३४; विन्दामः श १३,२,२,१५; गो १, २, ११[२]; विन्दान् श ६,३,१, २०; ७,३, २,१५; विन्दातै जैमि ३,११७[२]; विन्दतु तै ३,७,६,१३; विन्दस्व

a) वैप १ द्र. । b) अर्थः? =विद्या-विशेष- इति क्षेमकरणदासः । c) वैतु. BI. पूर्वेण संहित इव अवेद° इति? d) =उपनिषद्- । षस. । e) विप. (ऋषि-) । f) भावे युन् प्र. उसं. (पावा ३,३,१०७) । नित्स्वरः । g) तु. टि. १चेतव्य- । h) आत्मनेपदे त- लोपः (पा ७,१,४१) । i) पाभे. वैप१ अवपत्सि शौ ६,१२०, २ टि. द्र. । j) पाभे. पृ१०८४ j द्र. । k) विन्दन्ति इति जै१७१ । l) पाभे. पृ १२४ p द्र. । m) पाभे. पृ१२४ n द्र.।

